अवतीर्य्यं च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमान-मार्गः त्रिभुवनमिव पुञ्जीभूतम्, (ड) आगृहीत-कनक-वेत्रलतैः सित-वारवाणैः (१) सिताङ्गरागैः (२) सितकुसुमशेखरैः सितोष्णीषैः सितवेषपरिग्रहतया श्वेतद्वीपसम्भवैरिव कृतयुगपुरुषैरिव महाप्रमाणैर्दिवानिश-मालिखितैरिव उत्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम्, (ढ)

---

सङ्कटं व्याप्तम्, तथा अनेकद्वीपान्तरेभ्य आगतानां स्वस्वराजप्रयोजनसाधनाय उपस्थितानां दूतानां शतेन समूहेन समाकुलं व्याप्तं प्रवेशानुमत्यपेक्षया तेषां तत्रावस्थानादिति भावः।

(ड) अवेति। किञ्चेति चार्थः। चन्द्रापीडस्तुरङ्गमादवतीर्य्य, करतलेन करे वैशम्पायनमवलम्ब्य वैशम्पायनस्य करं धृत्वेत्यर्थः, सविनयं पुरः प्रस्थितेन बलाहकेन तदाख्येन सेनापतिना उपदिश्यमानमार्गः प्रदर्श्यमानप्रवेशपथः सन्, पुञ्जीभूतं त्रिभुवनमिव अतीवविशालत्वात् सर्वविधपदार्थाधारत्वाच्च एकत्र समवेतं त्रिजगदिव स्थितं राजकुलं विवेशेति बहुदूरवर्त्तिन्या क्रिययान्वयः। अत्र जात्युत्प्रेक्षालङ्कारः।

(ढ) आगृहीतेति। इतस्ततीयान्तपदानि वक्ष्यमाणस्य द्वारपालैरित्यस्य विशेषणानि। आगृहीता धृताः कनकवेत्रलताः स्वर्णखचितवेत्रयष्टयो यैस्तैः। सिताः शुभ्राः वारवाणाः कञ्चुका येषां तैः। सितान् वेषान् परिगृह्णन्तीति ते तेषां भावस्तया हेतुना श्वेतद्वीपे सम्भवैरिव उत्पन्नैरिव तेषां सर्वाङ्गे श्वेतत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः, तथा सितपदस्यासकृदुपादानादनवीकृतत्वदोषः, स च सित-वारवाणाङ्गराग-कुसुमशेखरोष्णीषधारिभिरिति पाठेन समाधेयः। कृतयुगपुरुषैः सत्ययुगीयमानवैरिव महाप्रमाणैरतिदीर्घाकृतिभिः। अत्रोपमालङ्कारः। आलिखितैश्चित्रितैरिव सततसावधानतया निश्चलत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। उत्कीर्णैरिव तोरणस्तम्भेषु खोदितैरिव गाढसंलग्नत्वादिति भावः। अत्रापि क्रियोत्प्रेक्षा। तोरणस्य बहिर्द्वारस्य स्तम्भेषु निषण्णैस्तदाश्रयेणावस्थितैः, द्वारपालैर्दौवारिकैः दिवानिशं अनुज्झितः अपरित्यक्तः द्वारदेशो यस्य तत्। राजकुलमित्यस्य विशेषणमेतत्।

---

মেঘাচ্ছন্ন দিনের ন্যায় দেখা যাইতেছিল, এবং উত্তোলিতদণ্ড বহুতর শ্বেতচ্ছত্রে পরিপূর্ণ ও অন্যান্য অনেক দ্বীপ হইতে উপস্থিত রাজদূতগণে ব্যাপ্ত ছিল।

(ড) চন্দ্রাপীড় অশ্ব হইতে অবতরণ করিয়া স্বহস্তে বৈশম্পায়নের হস্তধারণপূর্ব্বক রাজবাটীতে প্রবেশ করিলেন; তখন বলাহক (সেনাপতি), বিনয়ের সহিত অগ্রে অগ্রে পথ দেখাইয়া যাইতেছিলেন। সেই রাজবাটী পুঞ্জীভূত ত্রিভুবনের ন্যায় দেখা যাইতেছিল। (ঢ) বহির্দ্বারের স্তম্ভের নিকটে দৌবারিকগণ সর্ব্বদা অবস্থান করিতেছিল, তাহাদের হস্তে সুবর্ণ-খচিত বেত্রযষ্টি, গাত্রে শ্বেতবর্ণ সাঁজোয়া ও শ্বেতবর্ণ অঙ্গরাগ এবং মস্তকে শ্বেতকুসুমের মালা ও শ্বেতবর্ণ উষ্ণীষ ছিল; সুতরাং শ্বেতবর্ণ সকল পরিচ্ছদ ধারণ করায় তাহারা যেন শ্বেতদ্বীপ-সম্ভূত-বলিয়া বোধ হইতেছিল; আর সত্যযুগের মনুষ্যের ন্যায় তাহাদের অত্যন্ত দীর্ঘ আকৃতি ছিল এবং নিশ্চলভাবে অবস্থান করায় তাহাদিগকে চিত্রিতের ন্যায় এবং ক্ষোদিতের

---

(१) सितवारवाणधारिभिः।

अनेक-सञ्जवन-(१) चन्द्रशाला-(२) विटङ्क-वेदिका-सङ्कट-शिखरैरभ्रङ्कषैरुपहसित-कैलास-शैल-शोभैः (३) अमलसुधावदातैः सप्रालेयशैलमिव (४) महाप्रासादैः, (ण) अनेक-वातायन-विवर-विनिर्गत-युवति-भूषण-किरण-(५) सहस्रतया कनकशृङ्खलाजालकेनेवोपरिविस्तीर्णेन (६) विराजमानम्, (त) अन्तर्गतायुधनिवहाभिराशीविष-कुल-सङ्कुलाभिः पातालगुहाभिरिवातिगम्भीराभिरायुधशालाभिरुपेतम्, (थ) अवलाचरणालक्तक-रस-रक्त-मणि-शकलैः शिखर-निलीन-

(ण) अनेकेति। अनेका बहुतराः, सञ्जवनानि चतुःशालानि, चन्द्रशाला उपरिस्थगृहाणि, विटङ्कानि कपोतपालिकाः, वेदिका उपवेशनार्थं बद्धभूमयश्च ताभिः सङ्कटानि व्याप्तानि शिखराणि उपरिभागा येषां तैः। "सञ्जवनन्त्विदं। चतुःशालं।" "कपोतपालिकायान्तु विटङ्कं पुंनपुंसक"मिति चामरः। "शिरोगृहान्ते वलभी-चन्द्रशाले सौधोर्द्ध वेश्मनि।" इति रभसः। अभ्रमाकाशं कषन्तीति तैः अत्युच्चैरित्यर्थः। "सर्वकूलाभ्रकरीषेषु कष" इति खप्रत्ययः। उपहसिता आपेक्षिकविशेषशुभ्रत्वात्तिरस्कृता कैलासशैलस्य शोभा यैस्तैः। अमलाभिः सुधाभिश्चूर्णलेपैः अवदाताः श्वेतास्तैः। महाप्रासादैश्च हृदट्टालिकाभिः करणैः, प्रालेयशैलेर्हिमाचलैः सहेति सप्रालेयशैलं तदिव स्थितमिति राजकुलमित्यस्य विशेषणम्। तादृशप्रासादानां हिमाचलतुल्यत्वादिति भावः। अत्र गुणोत्प्रेक्षालङ्कारः।

(त) अनेकेति। अनेकेभ्यो वातायनविवरेभ्यो गवाक्षरन्ध्रेभ्यो विनिर्गतं युवतिभूषणकिरणानां सहस्रं समूहो यस्मिन् तस्य भावस्तया हेतुना, उपरि विस्तीर्णेन प्रसारितेन कनकशृङ्खलानां जालकेन समूहेनेव विराजमानं तत्किरणानां कनकशृङ्खलावत् प्रतीयमानत्वादिति भावः। अत्र जात्युत्प्रेक्षालङ्कारः।

(थ) अन्तरिति। अन्तर्गता आयुधनिवहा अस्त्रसमूहा यासां ताभिः, अतएव आशीविषकुलेन सर्पसमूहेन सङ्कुलाभिर्व्याप्ताभिः, पातालगुहाभिः पातालविवरैरिव स्थिताभिः, अतिगम्भीराभिर्नितान्तभीषणाभिः आयुधशालाभिरस्त्रागारैरुपेतं युक्तम्। अत्रोपमालङ्कारः।

(द) अवलेति। अवलानां उपरिविचरणकारिणीनां रमणीनां ये चरणालक्तकरसास्तै रक्तानि

ন্যায় বোধ হইতেছিল। (ণ) সেই রাজবাটীতে কৈলাস-শোভা-তিরস্কারী, গগনস্পর্শী এবং নির্ম্মল-চূর্ণ-লেপনে শুভ্রবর্ণ বৃহৎ বৃহৎ অট্টালিকাসমূহ ছিল, তাহার উপরিভাগ বহুতর চতুঃশালা, চিলে কোঠা, পারা'র খোপ এবং বসিবার নিমিত্ত উচ্চ ভূমিতে ব্যাপ্ত ছিল, সুতরাং প্রতীতি হইতেছিল যেন সেই রাজবাটী হিমালয়-সংযুক্ত হইয়া রহিয়াছে। (ত) বহুতর গবাক্ষরন্ধ্র হইতে যুবতিগণের অলঙ্কারের কিরণ নির্গত হওয়ায় বোধ হইতেছিল যেন উপরিভাগে স্বর্ণশৃঙ্খলের জাল বিস্তৃত করিয়া রাখা হইয়াছে, তাহাতে রাজবাটীটি শোভা পাইতেছিল। (থ) সর্পসমূহব্যাপ্ত পাতালগুহার ন্যায় অত্যন্ত ভয়ঙ্কর, এবং নানাবিধ অস্ত্রে পরিপূর্ণ বহুতর অস্ত্রাগার সেই রাজবাটীতে ছিল। (দ) বহুতর কৃত্রিম ক্রীড়াপর্ব্বত ছিল; তাহার রত্নখণ্ড-

(१)...संयमन, संयवन...। (२)...शालिका...। (३)...सितकैलासशोभैः।
(४)...शैलमिव। (५)...युवतिकिरण...। (६) वितानेन, विततेन।

शिखि-कुल-कृत-केकारव-कलकलैः क्रीड़ापर्वतकैरुपशोभितम्, (द) उज्ज्वल-वर्ण-कम्बलावगुण्ठित-कनक-पर्य्याणाभिः प्रलम्ब-(१) चामर-कलाप-चुम्बित-चल-कर्ण-पल्लवाभिः कुलयुवतिभिरिवोपरूढ़-(२) शिक्षाविनय-निभृताभिः (३) याम-करेणुकाभिरशून्यकक्षान्तरम्, (ध) आलान-स्तम्भनिषण्णेन च नवजलधर-घोष-(४) गम्भीरं अनुगत-(५) वीणा-वेणु-रव-रम्यं आस्फालित-घर्घरिका-घर्घरं अनवरत-मृदु-मृदङ्ग-ध्वनिं (६) आमीलित-लोचन-त्रिभागेन वाम-दशन-कोटि-

---

लोहितानि मणिशकलानि रत्नखण्डानि येषां तैः, तथा शिखरेषु तेषामेव शृङ्गेषु निलीनानां स्थितानां शिखिनां मयूराणां कुलेन समूहेन कृताः केकारवा एव कलकलाः कोलाहला येषु तैः, क्रीड़ापर्वतकैः विहारार्थनिर्म्मितक्षुद्रपर्वतैरुपशोभितं राजकुलम्।

(ध) उज्ज्वलेति। उज्ज्वलवर्णैः कम्बलैः अवगुण्ठितानि आच्छादितानि कनकपर्य्याणानि स्वर्णनिर्म्मित-पल्ययनानि यासां ताभिः, प्रलम्बैर्दीर्घैः चामरकलापैः चुम्बितौ स्पृष्टौ चलौ चपलौ कर्णपल्लवौ यासां ताभिः, शिक्षा सङ्केतज्ञानं गार्हस्थ्यनैपुण्यलाभश्च, विनयः अनौद्धत्यं नम्रता च, तथा च उपरूढ़ाभ्यामुत्पन्नाभ्यां शिक्षा-विनयाभ्यां निभृता अनुयाः अप्रगल्भाश्च ताभिः, कुलयुवतिभिरिव स्थिताभिः यामकरेणुकाभिः प्रतिप्रहरं पृथक् पृथग् बन्धनीयाभिर्हस्तिनीभिः अशून्यानि अविरहितानि पूर्णानीत्यर्थः कक्षान्तराणि प्रकोष्ठमध्यभागा यस्य तत्तथोक्तं राजकुलं। अत्रोपमालङ्कारः।

(न) आलानेति। अपि चेति चार्थः। इतस्तृतीयान्तपदानि वक्ष्यमाणस्य गन्धहस्तिनेत्यस्य विशेषणानि। आलानस्तम्भे गजबन्धनस्थूणायां निषण्णः स्थितस्तदाश्रयेण स्थित इत्यर्थस्तेन। नवस्य जलधरस्य मेघस्य घोषवत् गर्जनवत् गम्भीरमिति लुप्तोपमा, अनुगतैः स्वानुसृतैः वीणारेणुरवैः रम्यं मनोहरं, आस्फालितानां वादितानां घर्घरिकाणां क्षुद्रघण्टिकानां घर्घरः शब्दो यस्मिन् तं तच्छब्दमिश्रितमित्यर्थः, अनवरतः अविश्रान्तः मृदुः कोमलो यो मृदङ्गध्वनिर्मुरजशब्दस्तम्, आकर्णयतेत्यस्य कर्म्मपदमेतत्। आकर्णनप्रकारमाह आमीलितेत्यादि। आमीलित ईषन्मुद्रितो लोचनयोस्त्रिभागस्तृतीयः अंशो येन तेन। त्रिभागेत्यत्र त्रिशब्देनैव तृतीयरूपार्थो बोध्यः, वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वनियमात् "त्रिभागशेषासु निशासु च क्षण"मिति कुमारसम्भवादावपि दर्शनात्। वामस्य

---

গুলি রমণীগণের চরণের আলতার রসে রঞ্জিত হইয়াছিল এবং ময়ূরগণ শৃঙ্গে বসিয়া কেকারবে কোলাহল করিতেছিল। (ধ) শিক্ষা ও বিনয়বশতঃ কুল-রমণীগণের ন্যায় শান্তস্বভাব এবং প্রতিপ্রহরে পরিবর্তনীয় কতকগুলি হস্তিনী প্রকোষ্ঠমধ্যে রহিয়াছিল, উজ্জ্বলরঙের কম্বল-দ্বারা তাহাদের সোনার জিনগুলি আচ্ছাদিত ছিল এবং লম্বমান চামরসমূহ, তাহাদের চঞ্চল ও বিস্তৃত কর্ণগুলি স্পর্শ করিতেছিল। (ন) আর একদিকে গন্ধমাদননামে একটা গন্ধহস্তী বন্ধনস্তম্ভে বদ্ধ ছিল ; তখন নবীন-মেঘ-গর্জ্জনের ন্যায় গম্ভীর, সঙ্গে সঙ্গে বীণা ও বংশীর রব হইতে থাকায় মনোহর এবং মন্দিরার শব্দ-মিশ্রিত অবিশ্রান্ত কোমল মৃদঙ্গধ্বনি হইতেছিল ;

---

(१) प्रचल, लम्ब...। (२)...उपारूढ़...। (३)...विनयेन निभृताभिः।
(४) जलधरगर्जितघोष...। (५) अतनु...। (६) अनवरतसङ्गीतकमृदङ्गध्वनिं। ...

निषस्-हस्तेन निश्चलकर्णतालेनाकर्णयता, (न) सलीलमुभयपार्श्वावलम्बि-(१) वर्णकम्बलतया विन्ध्यगिरिणेवाविष्कृतधातु-विचित्र-(२) पक्षसम्पुटेन, (प) आधोरण-गीतानन्द-कृत-मन्द्र-कण्ठ-गर्जितेन, (फ) मदजल-शवल-शङ्ख-शोभित-श्रवणपुटेन रजनिकर-विम्ब-चुम्बि-संवर्त्तकाम्बुद-वृन्द-(३) विडम्बकेन, (ब) कर्णान्तलम्बिना (४) काञ्चनमयेन कृतकर्णपूरमिवाङ्कुशेन मुखमुद्वहता, (भ)

---

दशनस्य दन्तस्य कोटौ अग्रे निषण्णः स्थितः हस्तः शुण्डा यस्य तेन। तथा कर्णौ ताले तालपत्रे इव इति कर्णताले तथा च निश्चले कर्णताले तालपत्रवद्विस्तृतकर्णौ यस्य तेन तादृशेन च सता, आकर्णयता तथाविधमृदङ्गध्वनिं शृण्वता। ईदृशा एव हस्तिनां गानादिश्रवणस्वभावाः अतएवात्र स्वभावोक्तिरलङ्कारः।

(प) सलीलमिति। सलीलं यथा तथा उभयपार्श्वे अवलम्बते पततीति तत्तादृशं वर्णकम्बलं विचित्र-पृष्ठास्तरणं यस्य तस्य भावस्तया हेतुना, "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयो"रित्यमरः। आविष्कृतं प्रकटितं धातुभिर्गैरिकादिभिः विचित्रं पक्षयोः सम्पुटं युगलं येन तेन तादृशेन विन्ध्यगिरिणेव स्थितेन। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(फ) आधोरणेति। आधोरणस्य हस्तिपकस्य गीतेन गानश्रवणेन य आनन्दस्तेन कृतं मन्द्रं गम्भीरं कण्ठगर्जितं येन तेन।

(ब) मदेति। मदजलेन शवलो विचित्रो यः शङ्खो ललाटास्थि तेन शोभितं श्रवणपुटं कर्णयुगलं यस्य तेन। "शङ्खो निधौ ललाटास्थि कम्बौ न स्त्री" इत्यमरः। अतएव रजनिकरबिम्बं चन्द्रमण्डलं चुम्बति स्पृशतीति तत् तादृशं यत् संवर्त्तकाम्बुदवृन्दं प्रलयकालीनमेघसमूहस्तद्विडम्बयति अनुकरोतीति तेन। शश-लाञ्छितचन्द्रमण्डलेन सह तादृशशङ्खस्य तन्मेघसमूहेन च सह हस्तिनः सादृश्यं बोध्यं। अतएवात्र आर्थो-पमा पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते।

(भ) कर्णेति। कर्णान्तलम्बिना काञ्चनमयेन अङ्कुशेन कृतकर्णपूरमिव विहितकर्णभूषणमिव मुखं वदनं उद्वहता धारयता। अत्र क्रियोत्प्रेक्षालङ्कारः।

---

গন্ধমাদন নয়নের তৃতীয়ভাগ ঈষৎ মুদ্রিত করিয়া, বাম দন্তের উপরিভাগে শুণ্ড সংস্থাপিত করিয়া এবং বিস্তৃত কর্ণযুগল নিশ্চল রাখিয়া সেই মৃদঙ্গের শব্দ শুনিতেছিল। (প) গন্ধমাদনের পৃষ্ঠের উপরে একখানা বিচিত্র কম্বল আস্তৃত ছিল, তাহা দুই পার্শ্বে ঝুলিয়া পড়িয়াছিল; সুতরাং ধাতুরঞ্জিত পক্ষযুগল-প্রসারণকারী বিন্ধ্যপর্ব্বতের ন্যায় গন্ধমাদনকে দেখা যাইতেছিল। (ফ) গন্ধমাদন, মাহুতের গান শুনিয়া আনন্দবশতঃ গম্ভীর গর্জ্জন করিতেছিল। (ব) মদজলে গন্ধমাদনের ললাটের হাড়খানা বিচিত্র হইয়াছিল, তাহাতে কর্ণযুগল শোভা পাইতেছিল, সুতরাং গন্ধমাদন, চন্দ্রমণ্ডলসংস্পর্শী প্রলয়কালীয় মেঘসমূহের অনুকরণ করিতেছিল। (ভ) সুবর্ণময় একখানা অঙ্কুশ তাহার কর্ণে ঝুলান ছিল, তাহাতে বোধ হইতেছিল যেন তাঁহার কর্ণে অলঙ্কার দেওয়া হইয়াছে, এই জাতীয় মুখভাগ সে বহন করিতেছিল। (ম) কতক-

---

(१) प्रलम्बित...। (२)...विचित्रित...। (३)...विम्बचुम्बितावर्त्तकाम्बुद...। (४) कर्णावलम्बिना।

मदजलमलिनेन द्वितीयेनेव कर्णचामरेण कपोलतलदोलायमानेन मधुकरकुलेनालङ्क्रियमाणेन, (म) अत्युदग्रतया पूर्वकायस्य अतिवामनतया च जघनभागस्य पातालादिव (१) उत्तिष्ठता, (य) निशासमयेनेव परिस्फुरत्सार्द्धचन्द्रनक्षत्रमालेन, (र) शरदारम्भेणेव प्रकटितारुण-चारु-पुष्करेण, (ल) वामनरूपेणेव कृतत्रिपदीविलासेन, (व) स्फटिकगिरितटेनेव लग्न-सिंहमुखप्रति-

(म) मदेति। मदजलेन तत्संसक्ततयेत्यर्थः मलिनं गाढ़कृष्णं तेन, तथा द्वितीयेन अपरेण कर्णचामरेणेव स्थितेन, कपोलतले गण्डयोरुपरि दोलायमानेन चञ्चलीभूतेन मधुकरकुलेन भ्रमरगणेन, अलङ्क्रियमाणो भूष्यमाणस्तेन। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(य) अत्युदग्रेति। पूर्वकायस्य शरीरपूर्वार्द्धस्य अत्युदग्रतया नितान्तोन्नततया, तथा जघनभागस्य शरीरपश्चाद्भागस्य च अतिवामनतया नितान्तखर्वतया हेतुना, पातालादुत्तिष्ठतेव, अन्यस्यापि निम्नादुच्चदेशोत्थानवेलायामीदृशावस्थादर्शनादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(र) निशेति। निशासमयेन रात्रिकालेनेव, परिस्फुरन्ती सर्वतो दीप्यमाना सार्द्धचन्द्रा अर्द्धचन्द्राकारललाटाभरणसहिता नक्षत्रमाला सप्तविंशतिसंख्यकमुक्ताग्रथितमाल्यं यस्य तेन। "सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकै"रित्यमरः। पक्षे परिस्फुरन्ती सार्द्धचन्द्रा अष्टमीचन्द्रसहिता नक्षत्रमाला तारकाश्रेणिर्यस्मिन् तेन। अत्र पूर्णोपमालङ्कारः।

(ल) शरदिति। शरदारम्भेणेव, प्रकटितं प्रकाशितं अरुणं रक्तवर्णं चारु सुन्दरञ्च पुष्करं शुण्डाग्रं यस्य तेन। पक्षे प्रकटितानि प्रस्फुटितानि अरुणानि चारूणि च पुष्कराणि पद्मानि यस्मिन् तेन। पूर्णोपमा। "पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः।" इत्यादि विश्वः।

(व) वामनेति। वामनरूपेण हरेर्वामनावतारेणेव, कृतः त्रिपद्या पादबन्धनशृङ्खलया विलासः क्रीड़ा येन तेन। "त्रिपदी पादबन्धन"मिति यादवः। "त्रिपदीच्छेदिनामपि" इति कालिदासप्रयोगश्च। पक्षे त्रयाणां पदानां समाहार इति त्रिपदी, कृतस्त्रिपद्या स्वर्गमर्त्त्यपातालेषु पादत्रयविन्यासेन विलासो लीला येन तेन। पूर्णोपमा।

গুলি ভ্রমর, মদজলে আরও মলিন হইয়া গণ্ডের উপরে দ্বিতীয় কর্ণচামরের ন্যায় ভ্রমণ করিতে করিতে গন্ধমাদনকে শোভিত করিতেছিল। (য) তাহার দেহের সম্মুখভাগ অত্যন্ত উচ্চ এবং পশ্চাদ্ভাগ অত্যন্ত খর্ব্ব ছিল বলিয়া সে যেন পাতাল হইতে উঠিতেছিল বলিয়া প্রতীতি হইতেছিল। (র) রাত্রিতে যেমন অর্দ্ধচন্দ্রের সহিত নক্ষত্রশ্রেণী দীপ্তি পাইতে থাকে, গন্ধমাদনেরও তেমন অর্দ্ধচন্দ্রাকৃতি ললাটাভরণের সহিত মুক্তার মালা দীপ্তি পাইতেছিল। (ল) শরৎকালের প্রারম্ভে যেমন রক্তবর্ণ ও সুন্দর পদ্ম প্রকাশিত হয়, গন্ধমাদনেরও তেমন রক্তবর্ণ ও সুন্দর শুণ্ডাগ্র প্রকাশ পাইতেছিল। (ব) বামনরূপী নারায়ণ যেমন বলির যজ্ঞে স্বর্গ, মর্ত্ত্য ও পাতালে স্বকীয় চরণত্রয়ের বিন্যাসদ্বারা লীলাখেলা করিয়াছিলেন, গন্ধমাদনও

(१) पातालतलादिव।

मेन, ( श ) प्रसाधितेनेव * आलोल-(१) कर्णपल्लवाहतमुखेन, ( ष ) गन्धमादन-नाम्ना गन्धहस्तिना सनाथीकृतैकदेशम्, ( स ) उज्ज्वल-पट्टकम्बल-पट-( २ ) प्रावारित-(३) पृष्ठैश्च रसित-मधुर-घण्टिका-रव-मुखर-कण्ठैः, मञ्जिष्ठा-लोहित-स्कन्ध-केसर-बालैः, (४) निहत-वन-गज-रुधिर-पाटल-सटैरिव केसरिभिः, पुरो-निहित-यवस-राशि-शिखरोपविष्ट-मन्दुरापालैः, आसन्न-मङ्गल-गीत-ध्वनि-दत्त-

---

( श) स्फटिकेति। स्फटिकगिरितटेनेव स्फटिकमयपर्वतभित्त्येव, लग्ना दन्तोपरि संसक्ता सिंहमुखा केशरिवदनाकारायदेशा प्रतिमा दन्तबन्धनशृङ्खला यस्य तेन। "गजानां दन्तबन्धेऽपि प्रतिमाऽनुक्तलावपि।" इति विकाण्डशेषः। पक्षे लग्ना आभिमुख्येन सिंहस्यावस्थानात् पतिता सिंहमुखस्य प्रतिमा प्रतिबिम्बं यस्मिन् तेन। पूर्णोपमा।

( ष ) प्रसेति। प्रसाधितेनेव नानाविधालङ्कारैरलङ्कृतेन जनेनेव। आलोलाभ्यां अतीवचञ्चलाभ्यां कर्णपल्लवाभ्यां विस्तृतकर्णाभ्यां आहतं भ्रमरापसारणाय ताड़ितं मुखं येन तेन। पक्षे आलोलाभ्यां कर्णयोः पल्लवाभ्यां आहतं मुखं यस्य तेन। पूर्णोपमा।

( स ) गन्धेति। गन्धमादननाम्ना गन्धहस्तिना पूर्वोक्तलक्षणेन गन्धगजेन सनाथीकृतः स्वसंयुक्तीकृतः अधिष्ठित इत्यर्थः, एकदेशो यस्य तत्, राजकुलमित्यस्य विशेषणमेतत्।

( ह ) उज्ज्वलेति। इतस्तृतीयान्तपदानि तुरङ्गमैरिति, वक्ष्यमाणस्य विशेषणानि। उज्ज्वलैर्दीप्तिमद्भिः पट्टकम्बलैः क्रमिकोषोत्थसूत्रनिर्म्मितकम्बलैः पटु सम्यक् प्रावारितानि आच्छादितानि पृष्ठानि येषां तैः। रसितानां ग्रीवाचालनेन शब्दितानां मधुराणां मनोज्ञानां घण्टिकानां क्षुद्रघण्टानां रवैः शब्दैः मुखरा शब्दायमानाः कण्ठा गला येषां तैः। मञ्जिष्ठावत् रञ्जनद्रव्यविशेषवत् लोहिता रक्तवर्णाः स्कन्धेषु केसरबालाः केसराख्यलोमानि तेषां तैः, अतएव निहतानां स्वयं मारितानां वनगजानां रुधिरैः पाटलाः श्वेतरक्ताः सटा जटा येषां तैः केसरिभिः सिंहैरिव स्थितैः! अत्रोपमालङ्कारः। पुरोनिहितानां अग्रतः स्थापितानां यवस-राशीनां घासपुञ्जानां शिखरेषु उपरिभागेषु उपविष्टा मन्दुरापाला वाजिशालारक्षका येषां तैः। "वाजिशाला

---

তেমন পাদবন্ধন শৃঙ্খলদ্বারা খেলা করিতেছিল। (শ) স্ফটিকময় পর্ব্বতভিত্তিতে যেমন সিংহ-মুখের প্রতিবিম্ব পতিত হয়, গন্ধমাদনেরও তেমন দন্তের উপরে একছড়া সিংহ-মুখের ন্যায় অগ্রদেশসমন্বিত শৃঙ্খল লগ্ন ছিল। (ষ) নানা অলঙ্কারে অলঙ্কৃত ব্যক্তির মুখ যেমন চঞ্চল কর্ণপল্লবদ্বারা আহত হইতে থাকে, গন্ধমাদনের মুখও তেমন বিস্তৃত কর্ণযুগলদ্বারা আহত হইতেছিল। (স) এইরূপে গন্ধমাদন নামক গন্ধহস্তী কর্ত্তৃক রাজবাটীর একদেশ অধিষ্ঠিত হইয়াছিল। (হ) এবং সেই রাজবাটী অশ্বশালাস্থিত বহুতর অশ্বে শোভা পাইতেছিল; উজ্জ্বল রেসমী কম্বলে তাহাদের পৃষ্ঠদেশ সম্পূর্ণ আচ্ছাদিত ছিল; শব্দায়মান মনোহর ক্ষুদ্রঘণ্টার রবে তাহাদের কণ্ঠদেশ শব্দিত হইতেছিল; তাহাদের স্কন্ধের উপরে মঞ্জিষ্ঠার ন্যায় রক্তবর্ণ কেসর (লম্বা লোম) ছিল, সুতরাং নিহত বন্য হস্তীর রক্তে রক্তবর্ণ-জটা-সমন্বিত সিংহের ন্যায় সেই অশ্বগুলিকে দেখা যাইতেছিল; তাহাদের সম্মুখ-স্থাপিত ঘাসরাশির উপরে অশ্বশালার

---

* प्रसाधितेन। (१) लीन...। (२)...पट...। (३)...प्रावृत, प्रावरित...। (४)...बालपल्लवैः।

कर्णैः, अन्तःकपोल-धृत-मधुर-सरस-(१) लुलित-लाज-(२) कवलैः, भूपालवल्लभै-र्मन्दुरागतैस्तुरङ्गमैरुद्भासितम्, (ङ) अधिकरणमण्डपगतैश्चार्य्यवेशैरत्युच्चवेत्रा-सनोपविष्टैर्धर्म्ममयैरिव धर्म्माधिकारिभिर्महापुरुषैरधिष्ठितम्, (च) अधिगत-सकल-ग्राम-नगर-(३) नामभिरेकभवनमिव जगदखिलमालोकयद्भिरालिखित-सकल-भुवन-व्यापारतया धर्म्मराजनगर-व्यतिकरमिव दर्शयद्भिरधिकरण-(४) लेखकैरालिख्यमान-शासन-सहस्रम्, (छ) अभ्यन्तरावस्थित-नरपति-निर्गम-(५)

---

तु मन्दुरा" इत्यमरः। आसन्नेषु समीपवर्त्तिषु मङ्गलगीतध्वनिषु दत्तौ कर्णौ यैस्तैः, तेषामपि गानश्रवणोत्-सुकत्वादिति भावः। अन्तःकपोलेषु गण्डाभ्यन्तरेषु धृताः मधुराः सुस्वादाः सरसा गुडेनार्द्राः अतएव लुलिता उभयतो गलद्गुडाः लाजकवला धानाग्रासा यैस्तैः। भूपालवल्लभै राज्ञः प्रियैः, मन्दुरागतैर्वाजि-शालास्थितैः तुरङ्गमैर्घोटकैः उद्भासितं शोभितं। इदं राजकुलमिति वक्ष्यमाणस्य विशेषणम्।

(च) अधीति। अधिक्रियन्ते जना अस्मिन्नित्यधिकरणं व्यवहारदर्शनसभा, तन्मण्डपगतैः, आर्य्य-वेशैः सभ्यजनोचितवेशैः सुपरिष्कृतपरिच्छदैरित्यर्थः, अत्युच्चेषु वेत्रासनेषु उपविष्टैः, धर्म्ममयैर्धर्म्मनिष्पन्नैरिव, धर्म्माधिकारिभिः व्यवहारदर्शिभिः प्राड्विवाकैः महापुरुषैः शिक्षान्यायपरायणतादिसद्गुणयुक्तैर्जनैः अधिष्ठित-माश्रितं राजकुलम्। अत्र गुणोत्प्रेक्षालङ्कारः।

(छ) अधीति। अधिगतानि ज्ञातानि सकलानां ग्रामनगराणां नामानि यैस्तैः। ग्रामलक्षणमाह स्म रघुनाथः—"तथा शूद्रजनप्राया सुसमृद्धकृषीवला। क्षेत्रोपयोगि-भूमध्ये वसतिर्ग्रामसंज्ञिका।" नगर-लक्षणमाह मार्कण्डेयपुराणम्—"देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः। नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः।" एकभवनमिव एकगृहमिव अखिलं जगदालोकयद्भिः चिराय पर्य्यालोचनावशात् एकगृहस्येव समग्रजगतः स्थानजनवृत्तान्तं जानद्भिरित्यर्थः। अत्रोपमालङ्कारः। आलिखिताः शासनसौकर्य्याय पत्रेषु लिखिताः, सकलभुवनस्य व्यापारा राजकार्य्यप्रयोजनीयस्थानजनादिघटनावली यैस्तेषां भावस्तया हेतुना, धर्म्मराज-नगरस्य यमपुरस्य व्यतिकरं सम्बन्धं दर्शयद्भिरिव स्थितैः, यमपुरेऽपि चित्रगुप्तादिभिः सकलभुवनव्यापारलिखना-

---

রক্ষকগণ বসিয়াছিল ; সেই অশ্বগুলি নিকটবর্ত্তী মঙ্গল-গীতের শব্দের দিকে কর্ণ অর্পণ করিয়া-ছিল ; গালের ভিতরে গুড়মিশ্রিত সুস্বাদু খই'র গ্রাস লইয়াছিল, সুতরাং গালের দুই দিক্ দিয়া তাহার রস বাহিয়া পড়িতেছিল ; এবং সেই অশ্বগুলি রাজার প্রিয় ছিল। (ঙ) বিচারালয়ে সাক্ষাৎ ধর্ম্মময়ের ন্যায় মহাগুণবান্ বিচারকগণ সভ্যজনোচিত বেশভূষায় সজ্জিত হইয়া অত্যুচ্চ বেত্রাসনে উপবেশন করিয়া রহিয়াছিলেন। (চ) বিচারালয়ের লেখকগণ বিচারকদিগের আদেশসমূহ লিখিতেছিল, তাহারা সকল গ্রাম ও নগরের নাম জানিত, এবং সর্ব্বদা আলোচনা করায় একখানি ঘরের মত সমগ্র জগৎ দেখিতেছিল আর সমস্ত জগতের ঘটনা লেখায় সেই রাজবাটীর সহিত যম-পুরীর কোন সম্বন্ধ আছে এইরূপ যেন দেখাইতেছিল। (ছ) বাটীর ভিতরে

---

(१)...मधु-रस-लव-लुलित...। (२)...जम्बाल...।

३)...ग्रामकर्वटनगर सकलनगरखेटखर्वट...। (४) अधिकार...। (५)...निर्गमन...।

प्रतीक्षण-परेण च स्थान-स्थानेषु (१) बद्धमण्डलेन, कनकमयार्द्धचन्द्र-तारागण-शबलैः (२) चर्म्मफलकैर्निशासमयमिव दर्शयता, स्फुरित-निशित-करवाल-कर-प्ररोह-करालितातपेन, एक-श्रवणपुट-घटित-धवलदन्तपत्त्रेण (३) ऊर्द्ध-बद्ध-मौलि-कलापेन, धवल-चन्दन-स्थासक-खचित-भुजोरुदण्डेन, बद्धासिधेनुकेन अन्ध्र-द्रविड़-सिंहलप्रायेण सेवकजनेन, (ख) आस्थानमण्डपगतेन च यथोचितासनोप-

दिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। अधिकरणस्य विचारालयस्य लेखकैर्जनैः, आलिख्यमानं पत्रेषु लिप्यमानं शासनसहस्रं राज्ञः प्राड़्विवाकानाञ्च आदेशसमूहो यस्मिन् तत्, राजकुलम्।

(ख) अभ्यन्तरेति। इतस्तृतीयान्तपदानि सेवकजनेनेति वक्ष्यमाणस्य विशेषणानि। अभ्यन्तरे वाटीमध्ये अवस्थिता महाराजतारापीड़समीपे स्वस्वप्रयोजनसाधनाय विद्यमानाः, ये नरपतयः स्वे स्वे राजानस्तेषां प्रतीक्षणपरेण वहिरागमनप्रतीक्षापरायणेन, आगतेषु तेषु तैः सह गमनाभिप्रायादिति भावः। बद्धं कृतं मण्डलं वर्त्तुलाकारेणावस्थानं येन तेन। कनकमयाः स्वर्णनिर्म्मिता ये अर्द्धचन्द्रा अर्द्धचन्द्राकारचिह्नानि तारागणा नक्षत्राकारचिह्नसमूहाश्च तैः शबलानि विचित्राणि तैः, चर्म्मफलकैः करणैः निशासमयं रात्रिकालं दर्शयतेव सता, रात्रावप्यर्द्धचन्द्रतारागणोदयादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। स्फुरितानां देदीप्यमानानां निशितानां तीक्ष्णानां करवालानां तरवारीणां करप्ररोहैः किरणाङ्कुरैः करालितो भीषणीकृत आतपः सूर्य्यालोको येन तेन। एकस्मिन् श्रवणपुटे कर्णपुटे घटितं योजितं दन्तपत्रं हस्तिदन्तनिर्म्मितपत्राकाराभरणं येन तेन। देशाचारात्तेषामेककर्णे दन्तपत्रधारणमिति बोध्यम्। ऊर्द्ध्वं बद्धो मौलिकलापः संसृष्टकेशपाशो येन तेन। धवलैश्चन्दनस्थासकैश्चन्दनचर्च्चाभिः खचितौ चिह्नितौ भुजौ ऊरुदण्डौ च यस्य तेन। ऊरौ चन्दनचर्च्चापि देशाचारात्। बद्धा कटीदेशेषु संयता असिधेनुकाः छुरिका येन तेन। "छुरिकाचासिधेनुका" इत्यमरः। अन्ध्रद्रविड़सिंहलास्तत्तद्देशीयाः प्रायाः बहुला यस्मिन् तेन। सेवकजनेन भिन्नभिन्नदेशीयराजगणशरीररक्षिलोकेन। अधिष्ठितमिति वक्ष्यमाणक्रियापदस्य कर्त्तृपदमेकमेतत्।

(ग) आस्थानेति। इतस्तृतीयान्तपदानि सामन्तलोकेनेति वक्ष्यमाणस्य विशेषणानि। आस्थानमण्डप-

মহারাজ তারাপীড়ের নিকটে অবস্থিত আপন আপন রাজার নির্গমনের প্রতীক্ষায় ভিন্ন ভিন্ন দেশীয় রাজগণের শরীররক্ষী সৈন্যগণ স্থানে স্থানে মণ্ডলাকারে অবস্থান করিতেছিল; তাহারা, অর্দ্ধচন্দ্রাকার ও নক্ষত্রাকার সুবর্ণময় চিহ্নসমূহে বিচিত্র ঢাল ধারণ করিয়া সেই সময়কে যেন রাত্রি বলিয়া দেখাইতেছিল, দেদীপ্যমান তীক্ষ্ণ তরবারির কিরণে রৌদ্রকে ভয়ঙ্কর করিয়াছিল, এক কর্ণে হস্তিদন্তনির্ম্মিত পত্রাকৃতি অলঙ্কার ধারণ করিয়াছিল, চুলগুলি মাথার উপরে বাঁধিয়াছিল, শ্বেতচন্দনের লেপে বাহুযুগল ও উরুযুগল চিহ্নিত করিয়াছিল এবং কটিদেশে এক একখানা ছুরী বাঁধিয়াছিল আর তাহাদের মধ্যে অধিকসংখ্যকই অন্ধ্রদেশীয়, দ্রবিড়দেশীয় ও সিংহলদেশীয় লোক ছিল। (গ) এবং সভামণ্ডপে বহুসহস্রসংখ্যক অভিষিক্ত সামন্তরাজগণ

(१) स्थाने स्थाने। (२)...शतशबलैः। (३) घटितानेकदन्तपत्त्रेण।

विष्टेन प्रसारयता दुरोदरक्रीड़ाम्, अभ्यस्यताऽष्टापदव्यापारम्, आस्फालयता परिवादिनीम्, आलिखता चित्रफलके भूमिपालप्रतिविम्बम्, आवध्नता काव्य-गोष्ठीम्, आतन्वता परिहासकथाम्, विन्दता विन्दुमतीम्, चिन्तयता प्रहेलिकाम्, भावयता नरपतिकृतकाव्य-सुभाषितानि, पठता द्विपदीम्, (१) गृह्णता कवि-गुणान्, उत्किरता (२) पत्रभङ्गीन्, आलपता वारविलासिनीजनम्, आकर्णयता वैतालिकगीतम्, (३) अनेकसहस्रसंख्येन, धवलोष्णीषपटाश्लिष्टविकट-किरीट-सङ्कट-शिरसा, सनिर्झर-शिखर-लग्न-(४) बालातपमण्डलेनेव कुलपर्वतचक्र-

गतेन सभागृहस्थितेन। दुरोदरक्रीड़ां द्यूतखेलाकौतं प्रसारयता विस्तारयता। अष्टापदव्यापारं शारिफलनिक्षेप-कार्य्यं अभ्यस्यता पौनःपुन्येन कुर्वता। "अष्टापदं शारिफल"मित्यमरः। परिवादिनीं सप्ततन्त्रीविशिष्टां वीणां आस्फालयता वादनेन स्पन्दयता। भूमिपालस्य राज्ञस्तारापीड़स्य प्रतिविम्बं, आलिखता भक्तिद्योतनार्थं चित्रयता। काव्यगोष्ठीं काव्यालापं आवध्नता कुर्वता। "गोष्ठी सभायां संलापे" इति विश्वः। आतन्वता बाहुल्येन कुर्वता। विन्दुमतीं प्रागुक्तलक्षणां (२४ पृष्ठास्थटीकायां) विन्दता लभमानेन अपरेण पृच्छ्यमानां शृण्वतेत्यर्थः। प्रहेलिकामप्युक्तलक्षणाम्। (२४ पृष्ठास्थटीकायां)। नरपतिना तारापीड़ेन कृतानि यानि काव्यरूपाणि सुभाषितानि सुन्दरवाक्यानि तानि भावयता मनोहरतया चिन्तयता। द्विपदीं पदद्वयात्मिकां गाथाम्। कविगुणान् तत्काव्यगतप्रसादमाधुर्य्यभावालङ्कारादिधर्म्मान् गृह्णता श्रुत्वैव बुध्यमानेन। पत्रभङ्गान् वाराङ्गनानां स्तनकपोलादौ तिलकविशेषान् उत्किरता ददता। वैतालिकानां वन्दिनां गीतं स्तुतिपाठं। अनेकानि सहस्राणि संख्या यस्य तेन। धवलैरुष्णीषपटैः आश्लिष्टानि सम्बद्धानि विकटानि महान्ति यानि किरीटानि तैः सङ्कटानि व्याप्तानि शिरांसि यस्य तेन, अतएव निर्झरैः प्रस्रवणैः सहेति सनिर्झराणि यानि शिखराणि शृङ्गानि तेषु लग्नं बालातपमण्डलं नवीनरविकिरणसमूहो यस्य तेन तादृशेन, कुलपर्वतानां महेन्द्र-मलयादीनां चक्रवालेन मण्डलेनेव स्थितेन। अत्र निर्झरैः सह धवलोष्णीषपटानां, बालातपैः किरीटानां

যথোপযুক্ত আসনে উপবেশন করিয়াছিলেন; তাঁহাদের মধ্যে কেহ কেহ পাশার কোঠ পাতিতেছিলেন, কেহ কেহ বারংবার পাশার ছক্ নিক্ষেপ করিতেছিলেন, কেহ বীণা বাজাইতে-ছিলেন, কেহ চিত্রফলকে মহারাজ তারাপীড়ের প্রতিমূর্ত্তি চিত্রিত করিতেছিলেন, কেহ কেহ কাব্যালাপ করিতেছিলেন, কেহ কেহ পরিহাস করিতেছিলেন, কেহ বিন্দুমতী (কাব্যবিশেষ) শুনিতেছিলেন, কেহ প্রহেলিকার চিন্তা করিতেছিলেন, কেহ মহারাজ তারাপীড়-কৃত কাব্যময় মনোহর বাক্যের ভাবনা করিতেছিলেন, কেহ দ্বিপদিকা পাঠ করিতেছিলেন, কেহ কবির গুণ গ্রহণ করিতেছিলেন, কেহ বারবনিতাদিগের কণ্ঠ-কপোলে তিলক দিয়া দিতেছিলেন, কেহ বারাঙ্গনাগণের সহিত আলাপ করিতেছিলেন এবং কেহ কেহ স্তুতিপাঠকদিগের গান শুনিতেছিলেন; তাঁহাদের মস্তক, শ্বেতবর্ণ উষ্ণীষ সংশ্লিষ্ট বৃহৎ বৃহৎ কিরীটে আবৃত ছিল; সুতরাং নির্ঝরজল-সংযুক্ত শৃঙ্গের উপরে নবীন সূর্য্যালোক পতিত হইলে কুলপর্ব্বতগণের ন্যায়

(१) द्विपदीः। (२) उत्कीर्य्यता। (३)...गीतिम्। (४)...आलग्न...

वालेन, मूर्द्धाभिषिक्तेन, सामन्तलोकेनाधिष्ठितम्, ( ग ) आस्थानोत्थित-भूमिपाल-संवर्त्तितानाञ्च कुथानां रत्नासनानाञ्च राशिभिरनेकवर्णैरिन्द्रायुधपुञ्जैरिव विराजितसभा-पर्य्यन्तम्, ( घ ) अमल-मणि-भूमि-(१) संक्रान्त-मुख-निवह-प्रतिबिम्बतया विकच-कमलपुष्प-प्रकरमिव सम्पादयता, गति-वश-रणित-नूपुर-पारिहार्य्य-(२) रशना-स्वन-(३) मुखरेण, स्कन्धावसक्त-(४) कनकदण्डचामरेण, निर्गच्छता प्रविशता चानवरतं वारविलासिनीजनेनाकुलितम्, ( ङ ) एकदेश-निषस-चामीकर-शृङ्खला-संयत-श्वगणम्, (५) ( च ) इतस्ततः प्रचलित-परिचिता-

---

कुलपर्वतैश्च सामन्तानां सादृश्यमित्युपमालङ्कारः। मूर्द्धनि अभिषिक्तेन राज्याभिषिक्तेनेत्यर्थः, सामन्तलोकेन अधीनदेशस्थराजगणेन अधिष्ठितमाश्रितं। राजकुलमित्यस्य विशेषणमिदम्।

( घ ) आस्थानेति। आस्थानात् सभातः उत्थितेषु उत्थाय चलितेषु भूमिपालेषु सदस्यनृपतिषु संवर्त्तितानां भृत्यैरुत्तोल्यैकत्र सङ्कोचितानां कुथानां विचित्रकम्बलानां रत्नासनानाञ्च अनेकवर्णैः राशिभिः, इन्द्रायुधपुञ्जैः इन्द्रधनुःपुञ्जैरिव स्थितैः, विराजितः शोभितः सभायाः पर्य्यन्तः प्रान्तभागो यस्मिन् तत्, राजकुलम्। अत्रेन्द्रायुधानां पुञ्जीभूतत्वासम्भावाज्जात्युत्प्रेक्षालङ्कारः।

( ङ ) अमलेति। अमलासु मणिभूमिषु संक्रान्तानि सञ्चरितानि मुखनिवहस्य प्रतिबिम्बानि यस्य तस्य भावस्तया हेतुना, विकचानां प्रस्फुटानां कमलपुष्पाणां पद्मानां प्रकरं समूहं सम्पादयता प्रवर्त्तयतेव, तन्मुखानां पद्मतुल्यत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। गतिवशेन गमनेन हेतुना रणितानां शब्दितानां नूपुराणां, पारिहार्य्याणां कङ्कणानां, रशनानां काञ्चीदाम्नाञ्च, स्वनैः शब्दैर्मुखरः शब्दायमानस्तेन। स्कन्धेषु अवसक्तानि लग्नानि कनकदण्डानि चामराणि यस्य तेन। तथा अनवरतं निर्गच्छता प्रविशता च वारविलासिनीजनेन वेश्यागणेन आकुलितं व्याप्तम्।

( च ) एकेति। एकदेशे निषसः स्थितः चामीकरशृङ्खलाभिः स्वर्णशृङ्खलाभिः संयतानां बद्धानां शुनां कुक्कुराणां गणो यस्मिन् तत्, राजकुलम्।

---

তাঁহারা বিরাজ করিতেছিলেন। (ঘ) রাজগণ সভা হইতে উঠিয়া গেলে ভৃত্যগণ সভার বিচিত্র কম্বল ও রত্নময় আসনগুলি একদিকে একত্র করিয়া রাখিল, তাহাতে পুঞ্জীভূত ইন্দ্রধনু-সমূহের ন্যায় নানাবর্ণের সেই কম্বল ও রত্নাসনে সভার প্রান্তভাগ সুশোভিত হইয়াছিল। (ঙ) বারবনিতাগণ স্কন্ধে সুবর্ণদণ্ডের চামর লইয়া অনবরত প্রবেশ করিতেছিল এবং নির্গত হইতেছিল, তখন নির্ম্মল মণিময়ভূমিতে তাহাদের মুখের প্রতিবিম্ব পতিত হওয়ায় তাহারা যেন প্রস্ফুটিত পদ্মসমূহ জন্মাইতেছিল আর গমনবশতঃ তাহাদের নূপুর, কঙ্কণ ও চন্দ্রহারের শব্দে শরীরও শব্দিত হইতেছিল। (চ) একদিকে স্বর্ণশৃঙ্খলে বদ্ধ বহুতর কুকুর বসিয়াছিল।

---

(१) अमलभूमि...। (२)...परिहार्य्यै...। (३)...रव...। (४) स्कन्धसक्त...।
(५)...श्वगणम्।

मितकस्तूरिकाकुरङ्ग-परिमल-वासित-दिङ्मुखम्, (छ) अनेक-कुब्ज-किरात-वर्षवर-(१) वधिर-वामन-मूक-सङ्कुलम्, (ज) उपाहृत-किन्नरमिथुनम्, आनीत-वनमानुषम्, आबद्ध-मेष-कुक्कुट-कुरर-कपिञ्जल-लावक-वर्त्तिका-युद्धम्, उत्कूजित-चकोर-कादम्ब-हारीत-कोकिलम्, लालप्यमान-(२) शुकसारिकम्, (झ) इभ-पतिमद-परिमलामर्ष-(३) जृम्भितैश्च निष्कूजद्भिः शिखरिणां जीवितैरिव गिरि-गुहानिवासिभिर्गृहीतैः पञ्जरकेशरिभिरुद्भास्यमानम्, (ञ) उत्त्रास्यमानैः

(छ) इत इति। इतस्ततः प्रचलितानां, परिचितानां विश्वस्तचित्तानां, अमितानां असंख्यानां कस्तूरिकाकुरङ्गाणां कस्तूरीविशिष्टहरिणानां परिमलेन गात्रसौरभेण वासितानि आमोदितानि दिङ्मुखानि यस्य तत्, राजकुलनम्।

(ज) अनेकेति। अनेके ये कुब्जाः, किराताः कृशदेहाः "किरातो म्लेच्छभेदे स्यात्कुनिम्बेऽल्पतना-वपि।" इत्यादि मेदिनी। वर्षमन्तःपुरं इन्वन्तीति वर्षवराः क्लीबाः, "शण्ढो वर्षवरस्तुल्या" इत्यमरः। वधिराः, वामनाः खर्वदेहाः, मूका वाक्शक्तिहीनाश्च तैः सङ्कुलम् व्याप्तम्।

(झ) उपेति। उपाहृतानि संगृह्य आनीतानि किन्नरमिथुनानि तुरङ्गवदनदम्पत्यो यत्र तत्। आनीता वनमानुषा यत्र तत्। आबद्धानि आरब्धानि मेषैः कुक्कुटादिभिश्च पक्षिविशेषैर्युद्धानि यत्र तत्। उत्कूजिता उच्चैःस्वरेण शब्दायमानाः, चकोराः, कादम्बाः कलहंसाः, हारीताः पक्षिविशेषाः, कोकिलाश्च यत्र तत्। लालप्यमानाः पुनः पुनर्लपन्तः शुकसारिका यत्र तत्। राजकुलमिति वक्ष्यमाणस्य विशेषणान्येतानि।

(ञ) इभेति। इभपतीनां करीन्द्राणां मदपरिमलैर्दानजलसौरभैर्ये अमर्षाः क्रोधास्तैर्जृम्भिताः पञ्जरमध्येष्वेव घूर्णितास्तैः, निष्कूजद्भिर्गर्जद्भिः, कूजधातोः कोकिलादीनां कोमलशब्द एव ख्यातत्वेनात्र कर्कशशब्दे प्रयोगात् ख्यातविरुद्धतादोषः, स च गर्जद्भिरिति पाठेनैव समाधेयः। शिखरिणां पर्वतानां जीवितैरिव प्राणैरिव गुहावासकाले तदभ्यन्तरसञ्चरणादिति भावः। अत्र जात्युत्प्रेक्षालङ्कारः। शिखरिणा-मित्यभिधाय पुनर्गिरिगुहानिवासिभिरिति गिरिपदाभिधानादत्र "उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्"

(ছ) বিশ্বস্তচিত্ত অসংখ্য কস্তূরী-মৃগ ইতস্ততঃ বিচরণ করিতেছিল, তাহাদের দেহের গন্ধে সকল দিক্ আমোদিত করিয়াছিল। (জ) বহুতর কুব্জ, কৃশদেহ, নপুংসক, বধির, বামন ও বোবা মানুষে সেই রাজবাটী ব্যাপ্ত ছিল। (ঝ) সেই বাটীতে বহুতর কিন্নরদম্পতী ও বনমানুষ আনা হইয়াছিল; স্থানে স্থানে মেড়া, বনকুকুড়া, বাজকুক্কুল, চাতক, লাওয়া (লাড়ুয়া) ও বাটভার পাখী লড়াই করিতেছিল; আবার কোন কোন স্থানে চকোর, বালিহাঁস, হরিতালিয়া ও কোকিল উচ্চৈঃস্বরে রব করিতেছিল এবং কোথাও শুক ও সারিকা-গণ অবিরত কথা বলিতেছিল। (ঞ) যে সকল সিংহ পূর্ব্বে গুহামধ্যে বাস করায় পর্ব্বতের জীবনের ন্যায় ছিল, সেই সিংহগুলিকে আনিয়া পিঞ্জরমধ্যে আবদ্ধ করা হইয়াছিল, তাহারা

(१)...वर्षधर, वर्वरवर्षवर...। (२) लालप्यमान...। (३) इभपतिपरिमलामर्ष...।

काञ्चन-भवन-प्रभा-जनित-दावानल-शङ्कै र्लोलतारकैर्भ्रमद्भिर्वन-(१) हरिण-कदम्बकैर्लोचनप्रभया शवलीकृतदिगन्तरम्, (ट) उद्दाम-केकारवानुमीयमान-मरकत-कुट्टिम-स्थित-शिखण्डि-मण्डलम्, (ठ) अतिशिशिर-चन्दन-विटपि-च्छाया-निषण्ण-निद्रायमाण-गृह-सारसम्, (ड) अन्तःपुरेण च बालिकाजन-प्रस्तुत-कन्दुक-पञ्चालिका-क्रीडेन, (ढ) अविरत-वाह्यमान-(२) दोला-(३) शिखर-क्वणित-

---

इति दर्पणोदाहृतवत् भग्नप्रक्रमतादोषः, तत्समाधानाय पुनः शिखरिपदोपादाने तु कथितपदतादोषः प्रसज्येत, सुतरां तद्गुहानिवासिभिरिति पाठेनासौ समाधेयः। गृहीतैर्गिरिगुहातो गृहीत्वा आनीतैः पञ्जरकेशरिभिः पञ्जरस्थसिंहैः, उद्भास्यमानं उत्कर्षेण शोभमानम्, राजकुलम्।

(ट) उद्भास्येति। काञ्चनभवनानां स्वर्णनिर्म्मितगृहाणां प्रभाभिर्जनिता दावानलशङ्का येषां तैः, अतएव उद्भास्यमानैस्तयैव शङ्कया विशेषेण वलीक्रियमाणैः, अतएव च लोलतारकैः भ्रद्भिर्भ्रमद्भिः, वन-हरिणानां कदम्बकैः समूहैः, लोचनप्रभया नयनदीप्त्या शवलीकृतानि विचित्रीकृतानि दिशामन्तराणि यस्य तत्, राजकुलं। तेषां नयनानामपि, विचित्रत्वादिति भावः। अत्र काञ्चनभवनप्रभासु हरिणानां दावानल-भ्रमाद्भ्रान्तिमानलङ्कारः, तथा लोचनप्रभया दिगन्तराणां शवलीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति-श्चानयोर्मिथो निरपेक्षतया संसृष्टिः।

(ठ) उद्दामेति। उद्दामैर्विशालैः केकारवैः अनुमीयमानं मरकतकुट्टिमेषु स्थितं शिखण्डिमण्डलं मयूरसमूहो यस्मिन् तत्। मरकतबद्धभूमीनां मयूराणाञ्च तुल्यवर्णतया तत्रस्थितानां मयूराणां प्रत्यक्षेणानु-पलम्भात् केवलकेकारवैरेवानुमानमिति भावः। अतएव सामान्यालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः।

(ड) अतीति। अतिशिशिरासु नितान्तशीतलासु चन्दनविटपिनां चन्दनवृक्षाणां छायासु निषण्णा अवस्थिताः सन्तो निद्रायमाणाः गृहसारसा गृहपालितसारसपक्षिणो यत्र तत्।

(ढ) अन्तरिति। अपि चेति चार्थः। अन्तःपुरेणेति समुपेताभ्यन्तरमिति वक्ष्यमाणपदान्तर्गतायाः समुपेतेतिक्रियायाः कर्त्तृपदं, तथात्र तृतीयैकवचनान्तपदानि अन्तःपुरेणेत्यस्य विशेषणानि। बालिकाजनैः प्रस्तुता आरब्धा कन्दुकैर्गेण्डुकैः पञ्चालिकाभिर्वस्त्रनिर्म्मितपुत्तलिकाभिश्च क्रीडा खेला यस्मिन् तेन। "पञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः।" इति मेदिनी।

---

हस्तिगণের মদজলের গন্ধ পাইয়া পিঞ্জরমধ্যে ঘুরিতেছিল এবং গর্জ্জন করিতেছিল। (ট) বন্য হরিণগণ, স্বর্ণময় গৃহের প্রভাকে দাবানল মনে করিয়া ভীত হইয়া চঞ্চলনয়নে ইতস্ততঃ বিচরণ করতঃ নয়নের দীপ্তিতে বহু স্থান বিচিত্র করিয়াছিল। (ঠ) মরকতমণিময়-ভূমি-স্থিত ময়ূরগণকে কেবল বৃহৎ কেকারবে অনুমান করা হইতেছিল। (ড) অত্যন্ত শীতল চন্দনতরুর ছায়াতে থাকিয়া গৃহপালিত সারসপক্ষিগণ নিদ্রা যাইতেছিল। (ঢ) সেই বাটীর ভিতরে অন্তঃপুর সংলগ্ন ছিল; সেখানে বালিকারা গেড়ুয়া ও কাপড়ের পুতুল দিয়া খেলা

---

(१) भवन...। (२)—संवाह्यमान...। (३)...तोली...।

घण्टा-टङ्कार-पूरिताशामुखेन, ( ण ) भुजग-निर्म्मोक-शङ्कित-मयूर-क्रियमाण-हारेण, ( त ) सौध-शिखरावतीर्ण-प्रचलित-पारावत-कुलतया स्थलोत्पलिनीवन-शोभितेनेव, ( १ ) ( थ ) अन्तः-पुरिकाजन-प्रस्तुत-नरपति-चरित-विडम्बन-क्रीड़ेन, ( द ) अश्व-मन्दुरा-परिभ्रष्टागतैरवलुप्त-भवन-दाड़िमीफलैराखण्डिताङ्गन-सहकार-पल्लवैरभिभूत-कुब्ज-वामन-किरात-करतलाच्छिन्नानि भूषणानि विकिरद्भिः कपिभिराकुलीकृतेन, (२) ( ध ) शुक-सारिका-प्रकाशित-सुरत-विस्रम्भालाप-

( ण ) अविरतेति। अविरतं वाह्यमानानां दोलनसुखानुभवाय युवतिभिरारुह्य चाल्यमानानां दोलानां दोलनयन्त्राणां शिखरेषु उपरिभागेषु कषितानां दोलनवेगेन शब्दितानां घण्टानां टङ्कारैः 'टं' 'टं' इति शब्दैः पूरितानि आशामुखानि दिङ्मुखानि यत्र तेन।

( त ) भुजगेति। भुजगनिर्म्मोकस्य सर्पकञ्चुकस्य शङ्कितेन सञ्जातशङ्केन हारमवलोक्य सर्पकञ्चुकोऽयमिति भ्रान्तिमतेत्यर्थः मयूरेण क्रियमाणो हारी मुक्तामाला यत्र तेन। अत्र हारे मयूरस्य सर्पकञ्चुकभ्रमाद् भ्रान्तिमानलङ्कारः।

( थ ) सौधेति। सौधशिखरादट्टालिकोपरिभागादवतीर्णं सत् प्रचलितं पारावतकुलं कपोतसमूहो यस्मिन् तस्य भावस्तया हेतुना, स्थलोत्पलिनीनां जलहीनस्थानगतसपत्रपद्मलतानां वनेन समूहेन शोभितं तेनेव, तेषां कपोतानां पद्मपत्रवत् प्रतीयमानत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

( द ) अन्तरिति। अन्तःपुरिकाजनैः अन्तःपुरस्थस्त्रीलोकैः प्रस्तुता आरब्धा नरपते राज्ञस्तारापीडस्य यच्चरितं वेशविन्यासव्यवहारदर्शनादिव्यापारस्तस्य विडम्बनमनुकरणमेव क्रीड़ा यत्र तेन।

( ध ) अश्वेति। अश्वमन्दुराया वाजिशालातः परिभ्रष्टाः सन्त आगतास्तैः। "अश्वानां दृष्टिदोषबाधनार्थमश्वशालायां कपयः स्थाप्यन्त इति राज्ञामाचार" इति भानुचन्द्रः। अत्र मन्दुरापदेनैव वाजिशालाबोधनेऽपि पुनरश्वपदोपादानेनाधिकपदत्वदोषः, स तु अश्वपदपरिहारेणैव समाधेयः। अवलुप्तानि छिन्नानि भवनदाड़िमीफलानि गृहाङ्गनगतदाड़िम्बफलानि यैस्तैः। आखण्डितानि छिन्नानि अङ्गनसहकाराणां चत्वरस्थितास्रवृक्षाणां पल्लवानि यैस्तैः। अभिभूतानां तैरेव कपिभिराक्रम्य विजितानां कुब्जवामनकिरातानां कर-

आরম্ভ করিয়াছিল ; (ণ) যুবতিগণ দোলায় উঠিয়া অবিশ্রান্ত দুলিতেছিল তাহাতে দোলার উপরের ঘণ্টাগুলির 'টং টং' শব্দে সকল দিক্ পরিপূর্ণ হইতেছিল। (ত) কোন ময়ূর সাপের খোলস মনে করিয়া এক ছড়া হার লইয়া যাইতেছিল। (থ) কপোতগণ অট্টালিকার উপর হইতে ভূতলে পতিত হইয়া বিচরণ করিতে থাকায় বোধ হইতেছিল যেন সেই স্থানটি স্থলস্থিত পদ্মপত্রসমূহে শোভিত হইয়াছে। (দ) অন্তঃপুরের রমণীগণ মহারাজ তারাপীড়ের চরিত্রের অনুকরণরূপ খেলা করিতেছিল। (ধ) কতকগুলি বানর অশ্বশালা হইতে বাহির হইয়া আসিয়া, উঠানের দাড়িমফল পাড়িয়া, আমের পল্লব ছিঁড়িয়া, কুব্জ, বামনবীর ও কৃশদেহ লোকগুলিকে পরাস্ত করিয়া তাহাদের হাত হইতে বলপূর্ব্বক অলঙ্কার

(१) स्थलोत्पलिनीवनेनेव। (२)...आकुलीभूतेन।

लज्जितावरोधजनेन, ( न ) प्रसाद-सोपान-समारोहण-चलितैरबलानां चरणावसक्तैर्मणिमयैः पदे पदे (१) रणद्भिस्तुलाकोटि-वलयैर्द्विगुणीकृत-कूजित-रुताभिः (२) भवनकलहंसमालाभिर्धवलिताङ्गनेन, (३) (प) धृत-(४) धौत-धवल-दुकूलोत्तरीयैः कलधौत-दण्डावलम्बिभिः पलित-पाण्डुर-(५) मौलिभिराचारमयैरिव (६) विनय-मयैरिव (७) मर्य्यादामयैरिव मङ्गलमयैरिव गम्भीराकृतिभिः स्वभावधीरैः कञ्चुकिभिर्वयःपरिणामेऽपि जरत्सिंहैरिवापरित्यक्तसत्त्वावष्टम्भैः कञ्चुकिभिरधिष्ठितेन समुपेताभ्यन्तरम्, ( फ ) जलधर-(८) सनाथमिव कृष्णागुरुधूम-

---

तलेभ्य आच्छिन्नानि बलादाकृष्य नीतानि भूषणानि वलयादीनि विकिरद्भिरितस्ततो विक्षिपद्भिः कपिभिर्वानरैः आकुलीकृतेन उपद्रुतेन। अमी वानरस्वभावाः, अतएवात्र स्वभावोक्तिरलङ्कारः।

( न ) शुकेति। शुकसारिकाभिः शयनगृहगताभिरिति तात्पर्य्यं, प्रकाशिता जनान्तरसकाशे स्पष्टमुच्चारिताः ये सुरतविश्रम्भालापा रमणकालीनस्वैरवाक्यानुकरणवाक्यानि तैर्लज्जिता अवरोधजना अन्तःपुररमण्यो यत्र तेन।

( प ) प्रासादेति। प्रासादानां सोपानेषु समारोहणेन चलितैः स्पन्दितैः, अबलानां चरणेषु अवसक्तैः स्थितैः, मणिमयैः, पदे पदे प्रतिपदक्षेपं रणद्भिः शब्दायमानैः तुलाकोटिवलयैर्नूपुरमण्डलैः "पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियां" इत्यमरः, द्विगुणीकृतं स्वकीयरवैर्वर्द्धितं कूजितरुतं अव्यक्तशब्दो यासां ताभिः, भवनकलहंसमालाभिर्गृहपालितकादम्बश्रेणिभिः धवलितं स्वस्वावस्थानेन शुभ्रीकृतं अङ्गनं चत्वरं यस्य तेन।।

( फ ) धृतेति। धृतानि धौतानि रजकपरिष्कृतानि अतएव धवलानि दुकूलोत्तरीयाणि पट्टोत्तरीयवसनानि यैस्तैः। कलधौतदण्डान् स्वर्णयष्टीरवलम्बन्ते धारयन्तीति तैः। पलितेन वार्द्धक्यजनितशुक्लतया पाण्डुराः शुभ्राः मौलयः केशा येषां तैः। आचारमयैरिव शिष्टव्यवहारविकारैरिव सर्वदा तदनुसरणात्तदुप-

---

আনিয়া তাহা ইতস্ততঃ নিক্ষেপ করতঃ অন্তঃপুরটাকে আকুল করিয়া তুলিয়াছিল। (ন) শুক ও সারিকাগণ সম্ভোগসময়ের বিশ্রম্ভালাপ প্রকাশ করিয়া অন্তঃপুরের রমণীদিগকে লজ্জিত করিতেছিল। (প) কতকগুলি বালিহাঁস আসিয়া উঠানখানা সাদা করিয়া ফেলিয়াছিল; এ দিকে রমণীগণ দালানের সিঁড়ী দিয়া উপরে উঠিতেছিল, তখন তাহাদের চরণস্থিত মণিময় নূপুরগুলি চলিতে থাকিয়া প্রত্যেক পদক্ষেপে শব্দ করিতেছিল, সেই শব্দে বালিহাঁসগুলির অব্যক্ত রব দ্বিগুণ করিয়া তুলিয়াছিল। (ফ) কঞ্চুকিগণ (বৃদ্ধব্রাহ্মণগণ) পরিষ্কৃত শ্বেতবর্ণ পট্টবস্ত্রের উত্তরীয় ধারণ করিয়া এবং স্বর্ণযষ্টি গ্রহণ করিয়া সেই অন্তঃপুরে অধিষ্ঠান করিতেছিলেন; তাঁহারা যেন সদাচারময়, বিনয়ময়, মর্য্যাদাময় ও মঙ্গলময় ছিলেন আর তাঁহাদের

---

(१) मणिमयैर्विभूषणैः पदे पदे। (२)···रुताभिः। (३) धवलीकृताजिरेण। (४) क्वचित् धृतपदं नास्ति। (५)...पाकपाण्डुर...। (६) आधारमयैरिव। (७) क्वचिदयं पाठो नास्ति।

(८) सजलजलधर...।